॥ श्रीः ॥

पाणिनिव्याकरणे

# उत्तरपक्षावली ।

सा च

खेमराज श्रीकृष्णदास श्रेष्ठिना

मुम्बय्यां

स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणालये

मुद्रयित्वा प्रकाशितम् ।

संवत् १९६६, शके १८३१.

॥ श्रीः ॥

पाणिनिव्याकरणे

# उत्तरपक्षावली ।



सा च

खेमराज श्रीकृष्णदास श्रेष्ठिना

मुम्बय्यां

स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणालये

मुद्रियत्वा प्रकाशितम् ।



संवत् १९६६, शके १८३१.

॥ श्रीः ॥

अथ

# उत्तरपक्षावलिप्रारम्भः ।



॥ श्रीगणेशाय नमः ॥

विद्याविनोदचतुरं विद्यादं विघ्ननाशनम् ।
तथाविधं मन्त्रुदेवं गुरुं वाग्देवतां भजे ॥ १ ॥
प्रश्नावल्यां होरिलस्य ये प्रश्नाः पण्डितैः कृताः ।
तेषां सदुत्तरार्थाय क्रियते ह्युत्तरावली ॥ २ ॥

तत्र तावत् धातोस्तन्निमित्तस्येति किम् ओयते औयतेति मूलोक्तदोषनाशाय न यकीति न्यासः । तत्समाधानम् आचारक्विबन्तप्रकृतिककर्तृक्विबन्तगोग्लौशब्दादिभ्यः तत्र साधुरिति यति गोयं ग्लौयमित्यादि तथा विजन्तभूधातोर्भौ इत्यस्माद्याति भोयमित्यादौ च धातोरेव यादिप्रत्ययभिन्नमित्यस्य वान्तादेशो माभूदिति न यकीति न्यासो दुष्टः ॥ इको गुणवृद्धी । वदव्रजहलन्तस्याच इति । ओतश्श्यनीति आदेच उपदेशसूत्रस्थभाष्यप्रामाण्यादजन्तेभ्य आचारक्विपोऽभावे तु भोयमित्यादाववश्यं दोषात् स दुष्ट एव । अतः अन्यत्समाधानं विभावयन्तु सुधिय इत्युक्तम् । तत्र समाधानान्तरमुक्तं भाष्यविरुद्धं तु धातोरित्यवयवषष्ठ्यैव उङ्शंभुस्तमिच्छति ऊयति आ ऊयति ओयति लङि औयदित्यादौ यथान्यासे न वान्तादेशः क्यजन्तधातोरवयवस्यैवैचो यादिप्रत्ययनिमित्तत्वाभावान्न यकीति न्यासे तु स्याद्दो- । गव्यति नाव्यति इत्यादौ तु व्यधिकरणषष्ठ्या चिन्त्यो वान्तादेशः द् तन्निमित्तस्येत्यनेन यादिप्रत्ययभिन्ननिमित्तस्यैवैचो वान्तादेश-

व्यावृत्तिरिष्येत तदा स्वाभाविकस्यैवैचो वान्तादेशे सिद्ध्यति गव्य
त्यादि सामान्यस्य व्यावृत्तौ तु न सिध्येदिति तत्त्वप्रकाशिका
स्पष्टम् । अकित्तद्धितयोः इति न्यासे यादौ तद्धिते च वान्ता
निषेधे तु बाभ्रव्यं गव्यतीत्यादि न सिद्ध्येत् न यकीति न्यासे ओ
इति न कुङितीति न्यासे गव्यमित्यादि च न सिद्ध्येत् । वान्तो
प्रत्यये दृश्यते इति च कृते यद्वा यि प्रत्यये स्वरबहुलमिति
यान्तवान्तादेशा बाहुलका इति सिद्धौ बहूनां वान्तविधीनां वैय
तथापि लक्ष्यानुसरणक्लेश इति सुहृद्भूत्वाचार्यस्तथा न कृतवान् अत
पाणिनीयानां क्वचित्स्वरक्यकार इत्यपातलक्षणस्य अस्मदाद्युद्दे
कृतत्वात् एतल्लक्षैकचक्षुष्काणां तं विना लक्षणं लक्ष्यदर्शनमाशङ्क्य नास
कर्तव्या यत्रानुगम इति भाष्यादननुगम एव लक्ष्यदर्शनं शरणं स
प्रामाण्य इति बोध्यम् । यत्तूक्तं वान्तो यीत्यस्य तत्सूत्रस्य भाष्याद्धा
विषयकत्वाद्धातोरित्यारब्धमृषिणेति तद्धातुरित्येतत्सूत्रस्थभाष्यवि
निर्मूलं च तथा हि प्रकृतसूत्रे भाष्ये एवकारः किमर्थः नियमार्थः नैतदी
प्रयोजनं सिद्धे सत्यारभ्यमाणउत्तरेणैवकारं नियमार्थं भविष्यति इष्टतो
वधारणार्थः तर्हि शङ्कव्यमित्यादौ यदि स्यादित्युक्तेः ॥ यत्तु असि
बहिरङ्गपरिभाषाया ऊठ्ग्रहणं ज्ञापकं इति भाष्ये दूषणं दत्तम् ऊठ्ग्रहणं
ज्ञापकं प्रौहेत्यादौ विभक्त्युदात्तार्थं तदकरणे ऊडिदं पदाद्यप्पुम्रैद्युभ्
पराऽसर्वनामस्थानविभक्तिरुदात्ता स्यादिति न प्रवर्तते इत्युक्तं तदिष्टाप
रदुष्टं वाहःस्थाने य ऊठ तस्य तेन ग्रहणमिति तद्भाष्यतो लाभात् कथ
न्यथा व्यूह इत्यादेरनभिधानमिति विभावय ज्वरत्वरस्रिव्यविमवामुपध
याश्चेत्यादिविहिते ऊठि ज्रूः जूरौ ज्रूरः तूरेत्यादावेव तत्प्रवृत्तेः तदु
परिभाषेन्दुशेखरे प्रौह इत्याद्यसाध्वेव वृद्धेः प्राप्तेः, अन्ये तु परिभाष
शयं विना न विधानं वर्णयन्ति ऊठिदमित्यत्र ववदिमेवास्तु को
अस्य दीर्घ ऊकारो यत्र वाशब्दस्य ह्रस्व उकारो यत्र ततः पराऽसर्वन
मस्थानविभक्तिरुदात्ता स्यादिति आद्यस्य ज्रूरः जूरेत्यादि द्वितीय
विश्वौह इत्याद्युदाहरणं वश्च वाश्च वौ द्वन्द्वे कृते लोपो व्योर्वलीति वलो

उश्च ऊश्चेति ह्रस्वदीर्घयोर्द्वन्द्वे कृते षष्ठीतत्पुरुषः ववास्थाने यौ ह्रस्वदीर्घौ उकारौ ताभ्यां पराऽसर्वनामस्थानविभक्तिरुदात्तेति तदर्थः । वो इदमित्यत्रावादेशः इदमपि समाधानं संदिग्धं क्लिष्टं लोपो व्योर्वलीति सूत्रस्थ वकारप्रत्याख्यानपरभाष्यविरुद्धं चेत्यरुचेरुक्तं दीर्घोच्चारणमूठोऽस्यां परिभाषायां ज्ञापकं संप्रसारणे निमित्ते गुणे वृद्धिरेचीति वृद्धौ विश्वौह इत्यादिसिद्धेरिति तदपि चिन्त्यम् । दीर्घोच्चारणस्यैत्येधत्यूठ्स्विति विशेषणार्थत्वं शेखरे स्फुटं जनानवति इति जनौरित्याद्यर्थमुक्तत्वात् । ज्वरत्वरस्रिव्यविमवामुपधायाश्चेत्यत्रापि ह्रस्वकरणे अक्षद्युरित्याद्यसिद्धेः । एतेनोठिदम्पद्याद्यप्युम्रैःद्युभ्य इत्यत्रापि ह्रस्व एव पठ्यते तत्परास्तम् । किं च चतुरनडुहो नद्यजादीत्यस्याग्रे वाह इति पठित्वा वाहः परे नद्यजादी उदात्ते स्त इत्येव सिद्धे ऊठग्रहणं व्यर्थमित्युक्त्वा वाहनद्या उदात्तविधानाद्वाह इति ङीप्विधिरपि नापूर्व इति भाष्याशयः । तस्यापि अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासइत्यस्याग्रे पाठेन ज्ञापकपरभाष्यप्रामाण्येन तस्य व्यवस्थितविभाषापरत्वादिष्टसिद्धिरित्युक्तं तदपि न । वाह इत्युक्ते ऊडिदमित्यत्रोठोऽकरणे जूर इत्यादौ स्वरासिद्धिः । तत्रोठि कृते वाह इत्यस्यापि करणे वाह इति ङीब्विधिज्ञापकसिद्ध इति लाघवं यथायाति तथापि अनभिधानमेव शरणं तत्रापि कथमन्यथा वाहो ङीप ज्ञापकादूङेति क्रियतां तस्यापि यूस्त्र्याख्याविति नदीत्वात् कथं वा श्रीमद्भिः प्रवाहेरित्यादौ परादिवद्भावेन वाह इत्यनेन प्राप्तः स्वरो बाधात् किं च तस्य बाह्यप्रयत्ने इत्यस्य वाह इत्यादौ त्वदुक्तव्यवस्थितविभाषाश्रयणं च प्रमाणं किं चोठः स्वरस्य विश्वौह इत्यादौ इष्टत्वज्ञापकपरभाष्यविरोध श्चेति तत्स्वराभिधानस्य भाष्यकारानभिप्रेतत्वमेव लभ्यत इति दिक् ॥ यत्तु विभक्तिश्चेति व्यर्थं प्रदेशे क्वचिद्यथायथं सुप्तिङ्ग्रहणेन चेष्टसिद्धेः । अष्टन इत्यत्र सुपीत्येवास्तु त्यदादीनामत्यत्र सुपीत्यनुवृत्तौ यत्र तत्रेत्यादावत्वं तु प्राग्दिशीयानां सुप्संज्ञयैव सिद्धे सुपि चेत्यत्र सुपि यभि इति न्यासेनैतर्हीत्यादौ अदोषः सुपो धातुप्रातिपदिकयोरिति सुपो लुक सुप्पितावित्यनुदात्तता च न

त्रलूतसिलादीनां विधानसामर्थ्यात् त्रलादौ लित्करणाच्चेति विभावयन्
सुधिय इत्युक्तम् तत्र विभक्तिसंज्ञा त्रलादौ प्रयोजनमिदमस्ति इद
इशादेशे ऊडिदमिति इदं स्वरेण तस उदात्तत्वमिति प्राग्दिशीय इत्य
भाष्ये स्पष्टं ततस्तृतीयद्वित्वमेतद्भाष्यगौरवादिति च कैय्यटे तत्र
यदुक्तं त्रलादीनां सुप्संज्ञायां सुपो धात्विति लुङ्न तेन विधानसामर्थ्य
दिति तन्न । तद्धिते सति प्रातिपदिकसंज्ञा तस्यां च तद्धितलोप इ
सन्निपातविघातादेवालुक्सामर्थ्येन अलुक्कर्तुमशक्यम् अव्ययसंज्ञा
तद्धितान्तात्सुपो लुक् एवं प्रयोजनसत्त्वात् तस्मादित्याद्यर्थे तादित्या
प्रयोगफलस्य सत्त्वात् प्राग्दिश इत्यत्र कैय्यटे उक्तम् । ननु मध्येऽपवादइ
न्यायादनुदात्तौ सुप्पितावित्येवं स्वरं विभक्तिस्वरो बाधते न तु लित्स्व
लित्स्वर एव तु परत्वाद्विभक्तिस्वरं बाधते नैष दोषः । ऊडिदम्पदाद्यप्
म्रैः द्युभ्य इत्येतत्सूत्रं लितीत्यत्रानुवर्तते लित्स्वरं बाधित्वा विभक्तिस्व
भवति· तृतीयादिग्रहणेन तृतीयामारभ्य प्राग्दिशः प्रत्ययो गृह्यत इति
च दानीमो मस्येत्संज्ञानिषेधाय विभक्तिसंज्ञेति स्पष्टं तत्र भाष्ये अन्य
मिदचोंत्यात्पर इत्यन्तादचः परं स्यादिति तत्र कैय्यटे स्पष्टं दानी
ऽदन्तस्वीकारे दोषाभावे ऽप्युक्तस्थले तस उदात्तत्वफलं विभक्तिसंज्ञाय
प्रयोजनम् इति भाष्ये स्थितं प्राग्दिशीयानां सुप्संज्ञायां सुप्तिङ्तुस
इति दानीमो मस्येत्वं न ऊडिदमित्यत्रापि सुबेव संबध्यते सावेकाच इ
त्रापि विभक्तिस्थाने सुप्करणादित्यदोष इति चेत्तर्हि अष्टाविवाचर
त्वाचारक्विबन्तादष्टन्शब्दाल्लटस्तिपि शपं बाधित्वा परत्वात्प्रतिपदोक्तत्व
द्विभक्तिग्रहणसामर्थ्याच्च नस्यात्वे ऽष्टातीति कृते तन्न स्यात् तस्मादः
इति विभक्तिग्रहणं कार्यं तसादीनां विभक्तिसंज्ञेष्टव्येति केचित् । अथ वाऽ
आ सुप्तिङीत्येवास्तु तसादीनां सुप्संज्ञैवास्तु विभक्तिश्चेति न कार्य
त्यन्ये यदि विभक्तिश्चेत्यस्य प्रत्याख्याने ऽत एवाग्रहणं तर्हि अतिला
वात्प्राग्दिशीयानाम् । माभूतां विभक्तिसुप्संज्ञे किं तु त्यदाद्यत्वफल
त्यदादीनामप्राग्दिशीयतसादौ वेति पठ्यतां प्राग्दिशीय इति न कर्त
सुपि यभीति च तथाष्टन इत्यत्र सुप्तिङेवास्तु दानीमो मस्य यथा ने

तथोक्तमेव इत इत्यन्तोदात्तस्तु तत्त्वप्रकाशिकायां स्पष्टम्॥ घुणघूर्णभ्रमणे अत्रोपधायां चेति दीर्घे सिद्धे दीर्घोच्चारणं प्रक्रियालाघवार्थमिति शेखरग्रन्थः । स चायुक्तः मूर्च्छादिषु दीर्घाकरणेऽत्र लेखकप्रमादेन दीर्घकरणात् ऊर्जेरपि दीर्घोच्चारणं तथैवोपधायां चेति सूत्रकरण एव लाघवादूर्णोतेर्नुलोपश्च महति ह्रस्वेति वचनादूकारस्यैव दीर्घ इत्यलम्॥षात्पदान्तात् पदान्तात्षकारात्परस्य नस्य णत्वं नेत्यर्थः । निष्पानं दुष्पानम् । अत्र कृत्यच इति वा भावकरणयोरिति वा णत्वं प्राप्तम् । अत्र मनोरमायां पदान्तात्किं पुष्णातीति प्रत्युदाहृतं तदयुक्तं । ष्टुत्वेन सिद्धेरिति शङ्का तत्समाधानं तु रषाभ्यां नोणः समानपद इति सूत्रे भाष्ये षकारग्रहणमुत्तरार्थं षात्परस्य नस्य ष्टुत्वेन निर्वाहात् एवञ्च षात्पदान्तादित्यनेनापि ष्टुत्वस्यैव निषेधः पदान्तग्रहणाभावे पुष्णातीत्यत्र ष्टुत्वनिषेधे रूपासिद्धिः स्पष्टैवेति पंडिताः । वस्तुतस्तु षग्रहणमुत्तरार्थमिति रषाभ्यां नोणः समानपद इत्यत्र भाष्येऽदर्शनाद्बाध्यसामान्यचिन्तया पदान्तषात्परस्य नस्य णत्वमात्रं निषिध्यत इत्यर्थः । न च षण्णामित्यत्रापि निषेधःस्यादिति वाच्यम् । पदेऽन्तः पदान्त इत्येव भाष्ये सुसर्पिष्केणेत्यादौ णत्वासिद्धये व्याख्यानात् पदस्थनकारस्यैव णत्वनिषेधात् एवञ्च पदान्तग्रहणाभावे सुसर्पिष्केणेति प्रत्युदाहर्तुमुचितमिति भाष्यदर्शिनः । न हि सुसर्पिष्केणेत्यत्र ष्टुत्वं लभ्यमिति दिक्॥ ददातिदधात्योर्विभाषा । अनुपसर्गादेतयोर्विभाषा शः । श्याद्व्यधेति णस्यापवादः शपक्षे तु जुहोत्यादित्वाच्छपः श्लुः श्लाविति द्वित्वं ददः दधः पक्षे णः दायः धायः इति अनुपसर्गादित्येव प्रदः प्रध इति मूलं तत्र पण्डिताः इदं सूत्रं मास्तु । दद दाने दध धारणे आभ्यां पचाद्यच् ददः दध इति श्याद्व्यधेति णे युकि दायः धाय इति च सिद्धेरित्याशङ्क्य समाहितम् अचि कृते न ददः अददः अत्र नञ्तत्पुरुषे तत्पुरुषेतुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्या इत्यनेनाव्ययपूर्वपदप्रकृतिस्वर इष्यते तम्बाधित्वा अच्कावशक्तौ अजन्तं कान्तं चान्तोदात्तं स्यादशक्ताविल्यन्तोदात्तंस्यादिति सूत्रमिति । वस्तुतस्तु समासात्प्रागेवान्तरङ्गत्वादच्कावशक्तावि-

त्यन्तोदात्ते निर्वृत्ते सति शिष्टत्वेनाव्ययपूर्वपदप्रकृतिस्वरः सिद्ध एव किं
तु अभ्यस्तानामादिरित्याद्युदात्तार्थं प्रददः प्रदधः इति व्यावृत्त्यर्थं दाञ्
धाञोरपि ददद्धयोः सिद्ध्यर्थं च वचनं तदपि रूपद्वयम्विभाषाग्रहण
विनैवानुबन्धवैरूप्याद्वा सरूपाणामेकशेष एकविभक्ताविति सूत्रेण
णञ्प्रत्ययाभ्यां सिद्धं विभाषाग्रहणं नानुबन्धकृतमसारूप्यमिति ज्ञापना
र्थमिति वासरूपोऽस्त्रियामिति सूत्रे भाष्ये स्पष्टम् ॥ चितः अन्त इत्यनुवर्त्तते
चितोऽन्त इत्यर्थः । अत्र वार्तिकम् चितः सप्रकृतेर्बह्वकजर्थमिति शेखरे
अस्यार्थः चित्प्रत्ययप्रकृतेरन्त उदात्त इति तदर्थो न तु प्रत्ययमा
त्रस्यान्त इति अत्र चाकचश्चित्वं ज्ञापकमन्यथाकच्च् एकाचूकत्वेन
प्रत्ययस्वरेणैवोदात्तत्वे सिद्धे तदर्थं व्यर्थं सदत्र ज्ञापकमिति तास्यनु
दात्तेन्ङिद्दुपदेशाल्लसार्वधातुकमनुदात्तमन्हिङोरित्यत्र शेखरे
तु अस्मात्परं लसार्वधातुकमनुदात्तं न्हुङ्अधीङौ वर्ज्जयित्वेत्यर्थः
रुणद्धीत्यत्र श्नमो मित्वेन परश्चेत्यस्य बाधे तत्सन्नियोगशिष्टप्रत्ययाद्यु
दात्तं बाधनमित्युक्तम् । अयं ग्रन्थः परस्परविरुद्धः । यथा मित्वेन
परश्चेत्यस्य बाधे तत्सन्नियोगशिष्टप्रत्ययाद्युदात्तत्वस्यापि बाधः
एवमकच्यपि प्राक्टेर्ग्रहणेन परश्चेत्यस्य बाधे तत्सन्नियोगशिष्टप्रत्य-
याद्युदात्तस्याप्राप्त्याऽऽकचश्चित्त्वस्य ज्ञापकतावर्णनमयुक्तमिति विरोधः ।
अत्र नवीनैरित्थं परिहीयते उभयशब्दस्य सर्वादौ पाठो व्यर्थ इति
प्रघट्टके भाष्यग्रन्थेऽकश्चेदानीं काकचोः स्वरे रूपे वा विशेषोऽस्ती
त्युक्त्वाऽकचि सन्नियोगशिष्टन्यायस्याश्रयणे प्रमाणाभाव इत्यन्यदपि
विभावयन्तु सुधिय इति । यत्त्वत्रोक्तम् चितः स्थाने चित्प्रत्ययप्रकृते-
रन्तोदात्त इति वार्त्तिकार्थस्तन्न । शोभनम् । अच्प्रभृतिप्रत्ययस्य कुण्डि
नजादेरप्रत्ययस्य चेह ग्रहणमिति कैयटविरोधात् बह्वकजर्थमिति प्रती-
कमुपादाय बह्वकचोऽन्तोदात्तत्वे कार्ये चितः सप्रकृतेरिति वचनमिति
कैयटाविरोधाच्च बह्वकच्प्रत्ययवती या प्रकृतिस्तस्याऽन्त उदात्त इत्ये-
वार्थो वार्त्तिकस्य एतद्वार्तिकप्रत्याख्यानपरभाष्यप्रामाण्याच्चायमर्थः ।
तथा हि तर्त्तर्हि वक्तव्यं न वक्तव्यं पूर्वसूत्रनिर्देशत्वात् चित इति भाष्यं

चित्वात्समुदायोऽन्तोदात्त इत्यर्थः । कुण्डिनजादयोऽपि व्यपदेशिवद्भा-
वाच्चिदन्ता उच्यन्त इति **कैयटः** चित इत्यनेन चित्वतोऽग्रहणेऽकच्
एकाच्कत्वेन प्रत्ययस्वरेणैवान्तोदात्तत्वं सिद्धम् । तस्य चित्करणाच्चि-
त्वत इत्यर्थो लभ्यते सप्रकृतेरिति बह्वकजर्थमुपादीयते तेन कुण्डिनप्र-
कृतिष्वदोष इत्युक्तम् । चित इत्यनेन चित्वतो ग्रहणे पुत्रकाम्यादिषु
चित्प्रत्ययान्तेषूपयोगाभावेन बह्वकजर्थमित्युक्तम् । तथैवोदाहृतं च **भाष्ये**
बहुच् बहुभुक्तमित्यादि अकच् सर्वकैरुच्चकैरित्यादि च यतः शेखरयो-
र्विरोधोद्भावनं तत्र श्नमो मित्वेन परस्येत्यस्य बाधेऽपि प्रत्यय इत्य-
स्य प्रकृतिरिष्यत एव प्रत्ययत्वं विना लशक्वतद्धित इति शस्येत्संज्ञाना-
पत्तेः । प्रत्ययत्वे चाद्युदात्तः सन्नियोगशिष्टः केन वार्य्येत अकचि तु
प्राक् टेर्ग्रहणात्परश्चेत्यस्य बाधेऽकचः प्रकृतिप्रत्ययविशिष्टस्य प्रत्ययत्वे
प्रामाण्यफलयोरभावश्चित इत्यनेन चित्वतोः प्रकृतिप्रत्ययोरविशेषेण
ग्रहणात्सन्नियोगशिष्टन्यायसंचारः काकदन्तपरीक्षावदाभातीति चित
इति सूत्रे **भाष्ये** स्पष्टम् ॥ **आर्द्धधातुकस्येड्वलादेः** ॥ अङ्गसंज्ञानि-
मित्तस्य वलादेरार्द्धधातुकस्येडिति सूत्रार्थः । अत्र **शेखरे** आर्द्धधातुक-
स्येति किम् जुगुप्सते इति अत्र सूत्रे **भाष्ये** ऋत इद्धातोरिति पदमु-
च्चार्य्य विहितस्य वलादेरिति व्याख्ययात्र दोषाभावादार्द्धधातुकग्रहणं
प्रत्याख्यातम् । **रुदादिभ्यः सार्वधातुक** इति नियमादास्ते शेते
इत्यादावदोष इति स्थितम् स्यसिच्सीयुट्तासिषु भावकर्म्मणोरुपदेशे
ज्झनग्रहदृशां वाचिण्वदिट् चेत्यत्र **भाष्ये** तु अङ्गस्येट् माभूदित्यार्द्धधातुके
इत्यनुवर्त्त्य योगविभागमाश्रित्य यावानिट् स सर्वोऽप्यार्द्धधातुकस्येडि-
त्युक्तम् । तत्परस्परविरुद्धं **शेखरग्रन्थोऽपि भाष्यविरुद्धः** । अत्रेत्थं
विरोधोद्धारं कुर्वन्ति पण्डिताः विधिसूत्रे प्रयोजनं नास्तीति प्रत्याख्यानं
योगविभागार्थतया प्रयोजनोक्तिः जुगुप्सत इति **शेखरग्रन्थस्तु** आर्द्ध
धातुकग्रहणमनुवर्त्योक्त इति । अत्रेदं तत्त्वम् । **स्यसिच्सीयुडिति** सूत्र-
स्थं **भाष्यं** तावदेकदेशिसूत्रकाररीत्या प्रवृत्तम् एवं सप्तमे योगविभागः
करिष्यते आर्द्धधातुकस्येट् यावानिट् नाम स सर्व आर्द्धधातुकस्य भवतीति

विज्ञेयं ततो वलादेरिति वलादेरार्द्धधातुकस्येट् भवतीति भाष्यम् । आर्द्धधातुकस्य इत्यस्य प्रत्याख्याने योगविभागस्यैकदेशयुक्तत्वं स्फुटमेव शेखरोऽपि युक्त एव तथा हि आर्द्धधातुकस्येति सूत्रे भाष्ये किमार्द्धधातुकस्येति पदाभावे वलादेरङ्गस्याप्रत्ययस्येडिति विप्रतिपत्तिं कृत्वा यद्येतत्पदाभावेऽङ्गस्येडापद्यते तत्पदसत्त्वेऽपि आर्द्ध धातुकस्य यदङ्गं तस्येडित्यापादयितुं शक्यत्वात्तत्राक्रियामाण एवेष्टं विज्ञास्याम इत्युक्तम् । अनेन लक्ष्यशरणं सूत्रकारस्यापीति दर्शितम् । इदन्तर्हि प्रयोजनम् इह माभूत् आस्ते शेते एतदपि नास्ति प्रयोजनं रुदादिभ्यः सार्वधातुके इत्येतन्नियमार्थं भविष्यति रुदादिभ्य एव सार्वधातुके इड् भवति नान्येभ्य इति । अत्र कैयटः सार्वधातुक एवेति नियमस्तु रुदविदमुषग्रहिस्वपिप्रच्छः संश्चेति क्त्वासनोः कित्त्वविधानान्न भविष्यति अनिट् सनो रुधादेर्हलन्ताच्चेति कित्त्वस्य सिद्धत्वात् क्त्वोऽनिट् औपदेशिककित्त्वसद्भावादिति एवमपि वृक्षता अत्र प्राप्नोति धातोरिति वर्तते एवमपि लूभ्यां पूभ्यामत्र प्राप्नोति एवन्तर्हि विहितविशेषणं धातुग्रहणं धातोर्यो विहितः । ननु च धातोः एवायं विहितः । न चायं धातोरित्येवं विहितः क्व पुनर्धातुग्रहणं प्रकृतम् ऋत इद्धातोरिति तद्वै षष्ठीनिर्दिष्टं पञ्चमीनिर्दिष्टेन चेह विहितं शंक्यते विशेषयितुं अथेदानीं षष्ठीनिर्दिष्टेनापि विहितं शंक्यते विशेषयितुम् । शंक्यमार्द्धधातुकग्रहणमकर्तुमिति प्रकृत सूत्रे भाष्ये स्थितम् लूभ्यामित्येतत्समानमेव जुगुप्सत इत्यार्द्धधातुकग्रहणाभावेऽप्यदोष एव । मनोऽनार्द्धधातुकत्वफलं गुणाभाव एव तेनेङ्गुणौ नेति फलन्तु भाष्यमते फलितार्थकथनपरं जुगुप्सत इति प्रत्युदाहरणं च ॥ व्यपदेशिवद्भावोऽप्रातिपदिकेनेति पूर्वादिनिस्सपूर्वाच्चेति योगविभागेन ज्ञापितेयमन्यथैकयोगं पूर्वात्सपूर्वादिनिरित्येव कुर्य्यात् न चात्र पृथग्योगे इष्टादिभ्य इत्यत्र स पूर्वादित्यस्यानुवृत्तिर्न स्यादेवं चानिष्टीति न सिद्ध्येदिति वाच्यम् । ज्ञापकपरं येन विधिरितिसूत्रभाष्यप्रामाण्यादनिष्टीत्यस्यासाधुत्वात् एकयोगेऽपि तावत् उत्तरत्रानुवृत्तौ बाधकाभावाच्च अत एव नान्तादसं-

ख्यादेर्मडिति सार्थकमन्यथाऽत्रापि व्यपदेशिवद्भावेन पञ्चम इत्यादा-वपि संख्यादित्वात्तद्वैयर्थ्यं स्पष्टमेवेति परिभाषेन्दुशेखरे स्पष्टम् । अत्रैष विचारो मन्दप्रयोजनः ॥ पूर्वत्रासिद्धम् । सपादसप्ताध्याय्रीम् उत्तरत्रा-स्य पाठात्पूर्वत्रपदेन तस्याग्रहणात्रिपाद्या असिद्धत्वं प्रति सूत्रे उत्तरत्रा-संबन्धात्फलितस्त्रिपाद्यां पूर्वं प्रति परमसिद्धमित्यर्थः । एवमर्थे श्चुत्वं ष्टुटि सिद्धम् वाच्यमित्यादिवार्तिकानि प्रमाणानि फलं गोधुङ्मानि-त्यादिसिद्धिः अन्यथा पूर्वं पूर्वशास्त्रप्रवृत्तौ घत्वजश्त्वानुनासिकेषु सत्सु-भष्भावो न स्यादिति शब्दरत्नोक्तिः । सा विरुद्धेति पदान्ते भष्भाव-स्य न्याय्यत्वात् तत्समाधानं जश्त्वापवादत्वेऽप्यनुनासिकत्वापवादत्वा-भावात्तत्र कृते भष्भावो न स्यात् जश्त्वे कृते इत्यत्र जश्त्वप्राप्ताविवत्यर्थ इति पण्डितोक्तिरसंबद्धा जश्त्वे कृते इति मूलाभावे जश्त्वप्राप्ताविति व्याख्याया दूरापास्तत्वात् । वस्तुतस्तु पौर्वापर्य्याश्रयणाविरोधेन पूर्व-पूर्वप्रवृत्त्या चर्त्वभष्भावजश्त्वानुनासिकानां प्रवृत्तौ नैवानिष्टं किंचित् किं तु घत्वे कृते झथ इति मतोर्मस्य वत्त्वापत्तिरेव शेखरोक्ता सुष्ठु इति चिन्त्यं सुधीभिः । अत्र यद्यपि लोकेऽनाहार्य्यज्ञानस्यैव प्रवर्त्तकत्वम् इष्टं तथापि शास्त्रप्रामाण्यादाहार्य्यारोपोऽपि शास्त्रप्रवृत्तौ अप्रवृत्तौ च नियामक इति बोद्धव्यमिति शेखरः । लोकेऽनाहार्य्येत्यादिनियामक इत्यन्तमुक्तम् । तस्यायं भावः । यथा भूतले घटोऽस्तीत्यादौ भूतलाधि-करणकघटकर्तृकसत्वाऽत्यन्ताभावप्रतिबन्धिका एवमेतत्रिपादीस्थं शास्त्रं सिद्धमेव तत्रापि त्रिपादीस्थकर्तृकसंभवज्ञानं प्रतिबन्धकम् एवं च पूर्वं शास्त्रं प्रति त्रिपादीस्थमसिद्धमित्यनुपपन्नमेव स्यादतोऽदर्शनरूपे लोपे ऽभावारोपस्य रूपत्वेन मनोरथ इत्यादावदोषोऽभावाभावस्य प्रतियो-गिस्वरूपत्वात् न चोत्वदृष्ट्या रोरित्यस्यासिद्धत्वमिति वाच्यम् ॥ दीर्घ-विधिसामर्थ्यादाश्रयासिद्धत्वात् अत्र समाधानं कर्म्मणो रोमन्थेत्यादि-निर्देशेन यत्र शास्त्रान्तरदृष्ट्याऽसिद्धत्वं नास्ति तत्रैवाश्रयासिद्धत्वमत्र तु हशि चेत्येतत्प्रवृत्त्यापि रोरित्यस्योत्वमिति नाश्रयासिद्धत्वमन्य-द्विभावयन्तु पण्डिताः ॥ वस्तुतस्तु यौगपद्येन शास्त्रद्वयप्रसङ्गे शास्त्रा

सिद्धत्वपक्षे रोरीत्यस्याप्रकृत्य ढ्रलोपाभावेन लोपशास्त्रस्यैवाप्रसङ्गः कार्य्यासिद्धत्वे रलोपे हशि चेत्यतः परत्वाल्लोप इति दीर्घेऽपि हशि चेत्यन्तरङ्गं प्रतिपदद्वयसापेक्षवहिरङ्गदीर्घस्य पूर्वत्रासिद्धमिति रलोपस्यासिद्धत्वादुत्वमेव किञ्च कर्म्मणो रोमन्थेत्यादिनिर्देशेनासिद्धवचनं किमर्थमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं चेति भाष्येण तत्रत्यकैयटविवरणाभ्यां शास्त्रासिद्धत्वस्यैवाश्रयणाददोष इति दिक् । स्त्रीप्रत्यये चानुपसर्जन इति ॥ अनुपसर्ज्जने स्त्रीप्रत्यये तदादिनियमो न उपसर्जने तु भवत्येव करीषगन्धेरपत्यं स्त्रीत्यर्थे तस्यापत्यमित्यणि अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्र इति ष्यङित्यण ष्यङादेशे चापि च रूपम् कारीषगन्ध्यायाः पतिः कारीषगन्धीपतिः परमकारीषगन्धीपतिः ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुष इति सम्प्रसारणं यथात्र भवति तथा परमकारीषगन्ध्यायाः पतिः परमकारीषगन्धीपतिरत्रापि भवति स्त्रीप्रत्ययस्य पतिं प्रत्युपसर्ज्जनत्वेऽपि परमशब्दार्थं प्रत्यनुपर्जनत्वात् कारीषगन्ध्याशब्दस्यापि ष्यङन्तत्वात्कारीषगन्ध्यामतिक्रान्ताऽतिकारीषगन्ध्येति विग्रहेऽतिक्रान्तार्थम्प्रति स्त्रीप्रत्ययस्योपसर्जनत्वात्तदादिनियमसत्वादतिकारीषगन्ध्याशब्दस्यापि ष्यङन्तत्वान्न संप्रसारणम् । अत्र पण्डिताः—इयं परिभाषा न कर्त्तव्या ष्यङो ऽनुपसर्जनस्य सम्प्रसारणमित्यादिसूत्रकरणात् । अत्र समाधानं परमकारीषगन्ध्या यस्य स परमकारीषगन्ध्यः विनापि प्रत्ययं पूर्वोत्तरपदलोपो वक्तव्य इति परमपदस्य लोपे कारीषगन्ध्यस्य पुत्र इति विग्रहे कारीषगन्धीपुत्र इतीष्यते स न स्यात् अतः परिभाषयैव वारणम् ॥ यद्यपि संज्ञा सत्तायां विषये पूर्वोत्तरपदलोपे सत्याभामा भीमो भीमसेन इत्यादि तदुदाहरणात्तथापि स्तोः श्चुना श्चुरित्यत्र योगः संयोगः सम्पदस्य सत्याभामेत्यादाविव विनाप्रीत्यतो लोपादिति शेखरे विरोधादसंज्ञायामपि लोप इति वदन्ति एतच्च परिभाषावर्णनं तस्याः प्रयोजनान्तरं नास्तीत्यभिमानेनैव वस्तुतस्त्वति खट्वायेत्यत्र याड्वारणम् परमखट्वायै इत्यादौ तद्भावनं परमकारीषगन्ध्याशब्दः प्रत्ययग्रहणपरिभाषया ष्यङन्तो न भवति इति परिभाषा-

श्रयणमनुपसर्जनत्वात्तदादिनियमेनात्र ष्यङन्तमपि तथापि ध्वनितं भाष्ये पूर्वपदलोपोऽप्यत्र चिन्त्यः । बहुधनोऽल्पधन इत्यादावपि तदापत्तेः ॥ यत्तु योगपदे सम्पदलोपोदाहरणं तत्र युजेरेव संयोगार्थकत्वेनादोषात् अत एवाव्यवहिते श्नुत्वासिद्धये स्तो श्चौ श्चुरित्युक्तम् । भाष्यसूत्रकारमतेऽपि स्पष्टप्रतिपत्तये संयोगपदाध्याहार एवोचित इति दिक्॥इजादेश्च गुरुमतोऽनृच्छः । इजादेः किम् ववौ।गुरुमतः किम् उवोस । अनृच्छः किम् आनर्च्छ । न च ऋच्छत्यृतामिति लिटि गुणविधानसामर्थ्यादाम्न भविष्यति किमनेन पर्युदासेनेति वाच्यम् । गुणविधानसामर्थ्येनामा व्यवहितेऽपि तत्प्रवृत्तेरिति शेखरे समाहितम्।तत्राशङ्का सूत्रेऽनृच्छ इति पदाभावे आनर्च्छेत्यत्राम् प्राप्तः गुणोऽपि प्राप्तस्तत्र प्रतिपदोक्तत्वादपवादत्वाच्च गुणे कृते इजादित्वाभावादामः प्राप्तिरेव नेति व्यर्थमनृच्छपदमत्र समाधानम् विभावयन्तु सुधिय इति पण्डिताः । शेखरपङ्क्तिस्तु इत्थम्—न च ऋच्छेर्लिटि गुणविधानसामर्थ्यादेव तत्सार्थक्यादिति सूत्रतात्पर्यादिति अनया पङ्क्त्या भाष्यसिद्धान्तोऽप्यागत इति सूचितम् । तथा हि इयेषेत्यादावाम् व्यावृत्तये उपदेशे गुरुमतोऽनृच्छ इति उक्त्या एवं तर्हि उच्छेराम्वक्तव्यः। अनृच्छ इति ज्ञापकादनौपदेशिकस्यापि गुरुमत्त्वस्याश्रयणे उञ्छांचकारेत्यादावसिद्धौ इयेषेत्यादावतिप्रसङ्गमाशङ्क्य उभयं न वक्तव्यमुपदेशग्रहणं न करिष्यते कस्मान्न भवति इयेषेत्यादौ उक्तम् वा किमुक्तं सन्निपातविरोधादित्यनृच्छग्रहणं व्यर्थमेवेति भाष्ये स्थिते पूर्वशेखरेऽनृच्छ इति पर्युदासमाश्रित्यैचो गुरोरनृच्छ इत्येव सिद्धेरादिग्रहणं मतुब्ग्रहणं च स्पष्टार्थमित्युक्तम् । इजादिगुरुमतैनैवानृच्छ इति पर्युदासः सार्थको नान्यथेति तद्भावस्तदपि चिन्त्यमेव संयोगे गुरुमत्त्ववतामेव ग्रहणापत्त्या इङ्गतौ इत्यादीनामसंग्रहापत्तेः ॥ इचो गुरोरिति सामर्थ्यान्नायं दोषोऽन्यथाऽनृच्छ इत्येव ब्रूयादिति चेत्तावतापीचो यदि गुरुमत्त्वस्याश्रयणे इङादेरसंग्रहः उञ्छादेरेव संग्रह इति दोषसद्भावात् वस्तुतस्तु गुर्विजादेरित्युक्त्येतरत्कर्तुमशक्यमथ वा गुर्वादेरित्येवास्तु दयायासश्चेत्यत्रासग्रहणादकारगुर्वादेश्चेत्तर्ह्यासेवेति नियमात्सिद्धेः न वा सेरौपदेशिकाकारगु-

र्वादित्वेनैतद्विषयकनियमे शाल्वादिप्रभृतिष्वाम्स्यादिति वाच्यम् । लाघवेन सामान्यनियमाश्रयणादिति दिक्॥ **अतो दीर्घो यञीति** सार्वधातुके किम् केशवः अङ्गना **केशाद्वोऽन्यतरस्यामिति** वः अत्र केचित् सार्वधातुकग्रहणं मास्तु सुपिचेति सूत्रनियमादेवादोषात् सार्वधातुकभिन्ने यजादौ दीर्घश्चेत्तर्हि सुप्येवेति केशवशब्दादावप्रवृत्तेः समाधानन्तु राजभ्यामित्यादावपि दीर्घापत्तिरिति अतो दीर्घस्य सुब्विधित्वाभावेन न लोपः सुप्स्वरसंज्ञातुग्विधिषुकृतीति न लोपासिद्ध्यभावात्सुबुतद्व्याप्यधर्माश्रयविधौ च सुब्विधित्वादिति समाधानान्तरं तु तत्त्वप्रकाशिकायां द्रष्टव्यम्॥ **ज्योतिरायुषः स्तोमः समासेऽगुले सङ्गः** इत्यतस्समास इत्यनुवर्त्तते आभ्यामुत्तरस्योत्तरपदावयवस्य ष इत्यर्थः ॥ अत्र मूले समासे किम् । ज्योतिषः स्तोम इत्युक्तम् । तत्र इण्कोरित्यधिकारात् किन्तु ज्योतिस्तोमोऽस्ति ब्राह्मणानामिति प्रत्युदाहर्त्तुमुचितमिति पंडिताः । केचित्तु समास इत्यस्य निवृत्तावप्यस्य पदविधित्वात्समर्थपरिभाषया समास एवास्य प्रवृत्तिरिति समासग्रहणं चिंत्यप्रयोजनमित्याहुस्तन्न । पदाधिकारस्यापदान्तस्य मूर्धन्य इत्यतः प्रागेव निवृत्तेः भाष्ये उक्तत्वात् । वस्तुतस्तु मूलाशय इत्थं योज्यः। **नुम्विसर्जनीयशर्व्यवायेऽपीति** षत्वस्य **सात्पदाद्योरिति** निषेधस्यापवादोऽयं तेन नुम्विसर्जनीयेति संबध्यते इति वाक्येऽपि प्रवृत्तिः । न च प्रत्येकमिति व्याख्यानान्निस्व इत्यत्रेवात्राप्यप्रवृत्तिरिति वाच्यम् ॥ एवं तर्हि समस्तान्येव भीरुष्टानाग्निष्टुदग्निष्टोमज्योतिष्टोमादीत्यन्तं समासे किम् इत्यनेन तदधिकारीयभीरोः स्थानमित्यादित्रिसूत्री किमर्थेति प्रश्नाशयः। असमासे प्रवृत्तिविरहात्पुष्यार्था सेति तदुत्तरमित्यन्ये॥ रामाद्रामादित्यत्र मूले जशत्वं **वावसान** इत्युक्तम् पूर्वं चर्त्वासिद्ध्या जश्त्वमिति **मनोरमा** अपवादत्वाज्जश्त्वं बाधित्वा चर्त्वं ततो जश्त्वमिति **शेखरः** जश्त्वाप्राप्तिविषये चर्त्वस्याचारितार्थ्यादपवादत्वसंगतेरिति शेखराशयः । अस्योपरि दूषणान्तरं षष्शब्दादौ पूर्वं षस्य ष एव चर्त्वं ततो जश्त्वे ष एव श्रूयेत जक्षित्यादयः षडिति निर्देशेन षस्य टकार एव न तु षकार इति परिहारेऽपि पूर्वापरविरोधः शेखरस्यास्त्येव उपानदित्यत्र

धत्वजश्त्वचर्त्वानीति तदुक्तेः ॥ किं च चतुर्णामित्यत्र णत्वं द्वित्वमिति प्रतीकमुपादाय ननु द्वित्वं णत्वमित्येव युक्तम् पूर्वत्रासिद्धमद्वित्वे इति वचनादिदं वर्णद्वित्वेऽपि प्रवर्त्तते वाक्क्वागिति भाष्योदाहरणात् अन्यथा द्वित्वदृष्ट्या चर्त्वस्यासिद्धत्वाद्गस्यैव द्वित्वे तस्य चर्त्वे पूर्वत्र गश्रवणापत्तेरित्युक्तम् अस्मादपि पूर्वं जश्त्वं पश्चाच्चर्त्वमित्यायातीति पंडिताः पदान्तविषये पूर्वं जश्त्वमिति न्याय्यमेव वावसाने इत्यस्यापदान्तझलां चर्त्वविधानेन चारितार्थ्यात् अत्र पदाधिकाराभावात् अनुकरणं चानितिपरमिति ज्ञापकादनितिपरस्याप्यनुकरणस्य सत्वादवसाने त्यदाद्यनुकरणे त्यत् तत् इत्यादौ पक्षे चर्त्वस्यापीष्टत्वात् नत्विदमयुक्तं न ह्यनुकरणत्वभंगभिया शास्त्रस्य बाधश्चमत्कारतामुपैति पटत् इति इत्यादिषु अव्यक्तानुकरणस्यात् इताविति शास्त्राणामप्रवृत्त्यापत्तिः तेषां वैयर्थ्यापत्तेश्चेत्यलं विस्तरेण॥ प्राचां ष्फस्तद्धितः गार्ग्यशब्दात्ष्फः आयनेयीनीयियःफढखच्छघांप्रत्ययादीनामितिफस्य आयनादेशे यस्येति चेति तद्धितनिमित्त इकारलोपः तद्धितान्तत्वे प्रयोजनं प्रातिपदिकसंज्ञा च ष्फान्तस्य तेन षिद्गौरादिभ्यश्चेति सिद्धश्च ङीषिति तत्र सवर्णदीर्घेण षित्त्वसामर्थ्यादप्रातिपदिकत्वेऽपि ङीषा च सिद्धिमाश्रित्य तद्धितग्रहणं प्रत्याख्यातम् गौकक्ष्यशब्दो गर्गादियञन्तस्तस्मात्क्रौड्यादिभ्यश्चेति क्रौड्यादिगोकक्ष्यशब्दात्ष्यङ् ततो यश्चेति चाप् गोकक्ष्या ततः ष्फप्रत्यये विवक्षिते तद्धितसंज्ञायां भस्याढे तद्धिते इति पुम्वद्भावे चापो निवृत्तिः ष्फप्रत्यये षित्वान्ङीष् गौकक्ष्यायणीति सिद्ध्यति पुंवद्भावश्च तद्धितत्व एव ष्फस्य संगच्छते पुंवद्भावाभावे यजन्तत्वविरहात्ष्फो न स्यादिति कस्यचित्समाधानं न युज्यते तथा हि गौकक्ष्यशब्दपाठस्य क्रौड्यादिषु भाष्ये प्रत्याख्यातत्वात् । गौकक्ष्येति तु षाद्यञश्चेति चापि सिद्ध्यति मास्तु क्रौड्यादित्वात्ष्यङ् न च गौकक्ष्यायणीति न सिद्ध्येच्चापः ष्फप्रत्ययस्यापवादत्वादिति वाच्यम् । प्राचां ष्फ तद्धित इत्यत्र सर्वत्रेति सूत्रात्सर्वत्रेत्यपकृष्य प्राचां सर्वत्र ष्फविधानात् गौकक्ष्येति तूदीचां मते सेत्स्यति एवञ्च गौकक्ष्यापुत्र इत्यादौ ष्यङन्तत्वाभावेन

ष्यङः सम्प्रसारणमित्यस्याप्राप्त्या गौकक्ष्यायाः सम्प्रसारणप्रतिषेधो वक्तव्य इति वार्तिकमनारम्भणीयमित्यपरमनुकूलम् । किं च ष्फप्रत्यये विवक्षिते भस्याढे तद्धित इत्यस्य प्रवृत्तिरनुचितैवायनादेशोत्तरमेव भसंज्ञायाः प्रवृत्तेः किं च ष्यङन्ते यञन्तत्वविरहेण ष्फस्याप्रवृत्तेः किं च तद्धितग्रहणमन्यतोऽपि विधानार्थं तेनासुरेरुपसंख्यानं नापूर्वमिति कैयटोऽप्येकदेशी तथाहि आसुरेरुपसंख्यानमित्यस्याग्रे भाष्ये छश्चेति वक्तव्यमासुरीयः इत्युक्तं तत्र सिद्धान्तः कैयटः आसुरिणा प्रोक्त इति विशेषेऽर्थेऽजश्चेति अणि पाप्रच्छ एव क्रियते लाघवादन्यथा द्विरासुरीयग्रहणं कर्तव्यं स्यादिति एतेनोपसंख्यानस्यावश्यकत्वे प्राचामिति सूत्रस्थभाष्ये तद्धितग्रहणं प्रत्याख्यानमेवाद्रियेत इति तत्त्वप्रकाशिकायां द्रष्टव्यम् ॥ टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयपूठक्ठञ्कञ्क्करप इत्यत्र वार्त्तिकम् नञ्स्नञ्ईकक्ख्युंस्तरुणतलुनानामुपसंख्यानमिति तेन ङीपि अन्तानुदाताविमौ गौरादिङीषि तु अन्तोदात्ताविति ग्रन्थकाराः तत्र पण्डिताः वार्त्तिके गौरादौ चानयोः पाठो मास्तु बह्वादिष्वेवानयोरस्तु पाठस्तत्र पाठान्ङीष् सिद्धः पक्षे वयस्यचरम इति ङीबिति स्वरद्वयसिद्धिरिति समाधानं विभावयन्तु सुधिय इति । अत्रेदं तत्त्वं तरुणतलुनशब्दौ तॄरश्च ल इति उरन्प्रत्ययान्तौ यौगिकौतरति प्रथमं वयस्तरति दुःखमिति वा यदाह दुःखतरणकम् औणादिः तदापि ङीषूसिद्धये गौरादिपाठ आवश्यको नेह वयस्यचरम इति प्राप्नोति एतच्च वयस्यचरम इति ब्रुवता तरुणतलुनयोरुपसंख्यानं कुर्वता वार्तिककारेण सूचितम् । सूत्रकारमतेन प्रथमवयोवाचिन एव ग्रहणात्तरुणतलुनयोरग्रहणमेव सर्वथेति गौरादिपाठस्तयोरिति बोध्यम् । मध्याह्ने तरुणो रविरित्यादौ प्रचण्डो रविरित्याद्यर्थमावश्यकं तरुणशब्दः प्रौढपर्यायोऽपि अथ तदर्थको यदा तरुणशब्दः प्रयुज्यतेऽथवा तरुणतात्पर्येण वृद्धेऽपि प्रयुज्यतेऽथ वा प्रौढ्यार्थको वा गृह्यते तत्तात्पर्य्येणोपसंख्यानमिति ॥ घेर्ङिति अत्राङ्गस्य सुपीति चानुवर्त्तते अत्र पण्डिताः वेर्ङीत्येवास्तु यस्मिन्विधिरिति परिभाषया तदादिविधौ ङदौ सुपीत्यर्थेन सिद्धे ङित्ग्रहणं व्यर्थं प्रायोगिकङ

देरसम्भवादावौपदेशिकङादित्वं गृह्यते प्रवाहशब्दात्तृतीयैकवचनस्थाने आङ्याजरेत्याङादेशस्तु ङादेश एवास्तु प्रवाहवेत्यादिसिद्धये मत्यामित्यादौ तु ङेरामादेशे तस्य ङादित्वाभावादाण् नद्या इति न प्रवर्तेत ङितिकरणे तु अनुबन्धकार्य्यत्वादनल्विधौकार्य्यत्वादनल्विधावपि स्थानिवत्वाज्जायते यद्यपि तथाऽपि ङेरामित्यत्र ङेर्ङामित्युक्ते न कश्चिद्दोष इति प्रश्नः। अत्रोत्तरं ङामादेशे कृते लशक्वित्संज्ञा आण्नद्या इत्याट् च प्राप्तौ तत्राडागमस्याङ्गत्वाद्वार्णपरिभाषयान्तरङ्गाया अपीत्संज्ञाया बाधे ङकारश्रवणापत्तिराडागमस्य नित्यत्वमपि इति केचित्समादधते वस्तुतस्तु इत्ग्रहणं स्पष्टार्थम् आण् नद्या इत्यादौ सेनान्यामित्यादौ ङामादेशश्चरितार्थ इति नद्यावन्ते परत्वान्ङामादेशे सकृद्गतिन्यायादाडागमाप्रवृत्तेर्यणारूपसिद्धेः न चाडागमाभावे नुट् स्यादिति वाच्यम् निरनुबन्धपरिभाषया आम्ग्रहणेन ङामोऽग्रहणादत एव सानुबन्धो ङामादेशश्चरितार्थः न चैवं रीत्या नुटोऽभावेऽपि आट्इव याट्स्याटोरप्यप्रवृत्तिः स्यादिति वाच्यम् । लक्ष्यव्यवस्थापकावेतौ न्यायौ पुनः प्रसङ्गेति सकृद्गतेतिवल्लक्ष्यानुरोधाद्याट्स्याटोर्विषये पुनःप्रसङ्गाद्याट्स्याटा वित्यदोषात् कथमन्यथाऽटि कृतेऽपि यदागमन्यायात्परादिवद्भावाद्धाऽऽमवेन प्राप्तस्य नुटो वारणं भाष्योक्तं संगच्छेत आगमादेशे परत्वात्कृते पुनः प्रसङ्गादाट् तस्मिन्कृते सकृद्गतिन्यायानुटोऽभाव इति भाष्यमते यथासिद्धिरिष्टस्य तथाऽत्र पक्षे ङामि कृते सकृद्गत्याऽऽटो भावः पुनः प्रसङ्गाश्रयेण याट्स्याटोः प्रवृत्तिरेव न भेदो रूपसिद्धिः समैव अथ वा भवत्वाट् ङस्येत्संज्ञा तु लशक्वित्यत्रोपदेशेऽजित्यत उपदेशपदानुवृत्त्या सेत्स्यति प्रत्ययस्योपदेशे आदिभूतं यल्लशकु तस्येत्संज्ञेति व्याख्यानात् एतच्च चुटू इति सूत्रे भाष्ये ध्वनितं तथा हि चञ्चुपूचणपोश्चकारप्रतिषेध इति वार्त्तिकप्रत्याख्यानाय भाष्ये उक्तं यकारादी चञ्चुपूचणपौ किं यकारो न श्रूयते लुप्तनिर्दिष्टो यकार इति अत्र यकारे लुप्तेऽपि प्रत्ययादिश्च इतीत्संज्ञाप्राप्त्योपदेशे आदिश्चकारो नास्तीति तात्पर्य्यं फलम् कल्प्यम् सामर्थ्यकल्पनाया अनौचित्यादेवञ्च लशक्वित्येतत् सूत्रेऽपि साहचर्य्येणो-

